THE

# BRAHMA SŪTRA BHĀṢYA

OF

ŚRĪKANTHACĀRYA

WITH

THE COMMENTARY

## ŚIVĀRKAMAṆI DĪPIKĀ

BY

THE FAMOUS APPAYA DĪKSITA.

It is a reprodction of earlier edition of Bharatee Mandiram Sanskrit Series

THE

# BRAHMA SŪTRA BHĀṢYA

OF

ŚRĪKANṬHĀCĀRYA

WITH

THE COMMENTARY

## ŚIVĀRKAMAṆI DĪPIKĀ

BY

## THE FAMOUS APPAYA DĪKṢITA.

EDITED AND PUBLISHED WITH
SŪTRĀRTHA-CANDRIKĀ
By
PANDIT R. HALASYANATHA SASTRI

VOL. I




NAG PUBLISHERS

11 A/U.A (POSTOFFICE BUILDING) JAWAHARNAGAR, DELHI- 7.

(This publication has been brought out with the financial assistance from the Government of India, Ministry of Education )

(If any defect is found in this volume please return the copy by V. P. P. for postage to the Publisher for free exchange)



1. 11A/U.A. (Post Office Bldg.) JAWAHARNAGAR, DELHI-7
2. 8A/U.A. 3, JAWAHARNAGAR, DELHI-110007
3. JALALPURMAFI (Chunar, Mirzapur), U.P.

FIRST EDITION
1908
REPRINT
1986
PRICE Rs. 90/- for 2 Vols.

(PRINTED IN INDIA)

Published by Nag Sharan Singh for Nag Publishers, 11 A/U.A. Jawahar Nagar, Delhi-7 and printed at New Gian Offset Printers, 495 D.D.A. Complex, Shahzada Bagh Extn. Dayabasti, Delhi

॥ ॐ ॥

॥ शिवाभ्यां नमः ॥

श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ॥

श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकाख्यव्याख्यासहितम् ।

तैरेव प्रणीतया तत्तदधिकरणपूर्वपक्षसिद्धान्तसंग्राहकपद्यरूपया

नयमणिमालया सनाथीकृतं च

रा० हालास्यनाथशास्त्रिणा संशोधितम् ।

स्वप्रणीतया चतुर्मतसंग्रहरूपया सूत्रार्थचन्द्रिकया संयोजितं च

प्रथम खण्ड




नाग पब्लिशर्स

११ ए/यू. ए. जवाहर नगर दिल्ली-११०००७

**नाग पब्लिशर्स**

१. ११ए/यू. ए. (पोस्ट आफिस बिल्डिंग ),
जवाहरनगर, दिल्ली ११०००७

२. ८ए/यू. ए. ३ जवाहरनगर दिल्ली ११०००७

३. जलालपुरमाफी (चुनार-मिर्जापुर) उ० प्र०

प्रथम संस्करण
१९०८
पुनर्मुद्रित
१९८६



नागशरण सिंह द्वारा नाग पब्लिशर्स, जवाहर नगर, दिल्ली-७ के लिए प्रकाशित तथा न्यू ज्ञान आफसेट प्रिंटर्स, ४९५ डी० डी० ए० कम्पलेक्स, शाहजादा बाग एक्सटेंशन, दयाबस्ती, दिल्ली-३५ द्वारा मुद्रित

॥ श्रीः ॥

॥ शिवाभ्यां नमः ॥

# श्रीमदप्पयदीक्षितेन्द्रविरचितश्रीशिवार्कमणिदीपिकाव्याख्यासहितश्रीकण्ठभाष्यप्रकटनस्य भूमिका ॥

आर्याः, अभिज्ञशिखामणयः सद्व्यवसायसाह्यशीलाः प्रभवः पण्डिताश्च ? वितरतेह, करुणया किञ्चिदवधानम् ?

(१) विज्ञातमेव हि भवतां यत्किल पुरा परमकारुणिको भगवान् बादरायणो लोकाननुजिघृक्षुर्मोक्षाख्यस्य तुरीयस्य परमस्य पुरुषार्थस्य प्राप्तावुपायभूतं ब्रह्मज्ञानमस्मानधिगमयितुमौपनिषदतत्त्वार्थविचाररूपं पादचतुष्टयपरिकर्मितैश्चतुर्भिरध्यायैः परिमितम् "अथातो ब्रह्मजिज्ञासे"त्युपक्रान्तं शारीरकमीमांसाभिधानं सूत्रवृन्दं निर्ममे इति ।

(२) मूलभूतस्य यस्य सूत्रनिकुरुम्बस्य तात्त्विकमर्थं व्याचिख्यासुभिर्महर्षिभिः प्रणीतासु वृत्तिषु कालवशादासेदुषीषु प्रचारलोपरूपां दुरवस्थाम् अज्ञानान्ध्यमासेदुषां जनानां चक्षुरुन्मीलयितुमेव तत्तत्कालेषु क्रमेण कृतावतारैर्भगवदंशभूतैः श्रीकण्ठशंकररामानुजानन्दतीर्थाद्यैर्महात्मभिरनुसृत्यैव प्रांचि मतान्यार्षाणि व्यरचिषत तत्तन्नामांकितानि बहूनि भाष्याणि भिन्नभिन्नमतानुसारीणि ।

(३) तेषु साम्प्रतमतिप्रसिद्ध्या लब्धप्रचाराणि श्रीकण्ठीयभगवत्पादीयरामानुजीयानन्दतीर्थीयसंज्ञानि चत्वार्येव भाष्याणि बह्वीभिर्व्याख्याभिरुपबृंहितानि सर्वतः प्रचरन्ति । येषामेव न्यरूपि विषयसङ्ग्रहः श्रीमद्भिरप्पयदीक्षितेन्द्रैः स्वकृते चतुर्मतलेशसङ्ग्रहे सम्यक्पृथक्पृथक् ।

(४) एतेषु भगवत्पादीयादीनि त्रीणि भाष्याणि अद्वैतविशिष्टाद्वैतद्वैतपराणि सम्प्रतिपन्नाभिर्व्याख्याभिस्सहैव संमुद्र्य प्रकटीकृतानि सम्मोदमावहन्ति सर्वतस्सुधियाम् ।

(५) परं त्वादिममप्यन्येषां त्रयाणामिदं श्रीकण्ठीयं शैवाद्वैतपरं भाष्यमननुगतव्याख्यमेव ग्रन्थलिप्यामेव सकृन्निर्वृत्तमुद्रणमित्यतो विमनीभावमासेदुषां कृतधियां प्रेरणया तदीयव्याख्यान्वेषणे प्रवृत्तश्चिरात्प्राचीनलुप्यमानलोकोत्तरसत्प्रबन्धप्रकटने धृतव्यवसायतया प्रबन्धयुगलीप्रकटनेन सम्पादितसहृदयमण्डलीमनःप्रत्ययतया च सहृदयसाह्यं सुलभं निश्चिन्वन्नाशासानश्च प्रारिप्सितस्य कर्मणो निरन्तरायपरिपूर्त्या जन्मसाफल्यं नामतश्चिरादुपलब्धामपि विस्तततया विलुप्तप्रचारतया च नयनपथदवीयसीं श्रवणाध्वनीनां श्रीमद्भरद्वाजकुलजलधिकौस्तुभायितश्रीरङ्गराजाध्वरीन्द्रसु-

कृतपरिपाकैश्चतुरधिकशतप्रबन्धनिर्माणालंकर्मीणाधिपणैर्विश्रुतकीर्तिभिः श्रीमदप्पय्य-यज्वावतंसैश्चिन्नबोम्मभूपालप्रेरणया विरचितामद्भुतशैलीं ग्रन्थषट्त्रिंशत्साहस्रीपरिमिततयाऽतिविस्तृतां दीक्षितेन्द्रयशःपताकायमानां तद्व्याख्यां शिवार्कमणिदीपिका-मंशतः क्वचित्क्वचिद्वर्तमानामतिशिथिलरूपामन्विष्यन्महता प्रयासेन नानादेशस्थितेभ्यो दाक्षिणात्यकोशेभ्यो माधुकर्या वृत्त्या तामासादयन्सद्व्यवसायसाह्यशीलेषु महाशयेषु सत्प्रभुषु प्रस्तुततदीयमुद्रणप्रवृत्तिः प्रोत्साहितश्च कैश्चिन्महाशयैरग्रिममूल्यप्रदानादिभिः श्रीमता श्रीकण्ठभाष्येण सहैव तत्रतत्र प्रत्यधिकरणं चतुर्मतलेशसङ्ग्रहान्तर्गतयानयमणिमालया मतचतुष्टयानुसारेण तत्तदधिकरणविषयवाक्यपूर्वपक्षसिद्धान्तसूत्राक्षरार्थप्रकाशिन्या मन्निबद्धया सूत्रार्थचन्द्रिकया च सनाथीकृत्य नागरलिप्यां सम्मुद्र्य प्रकटयितुं प्रावृतम् ।

(६) विपुलद्रव्यसाध्यं महदिदं कर्म दुस्साधं मादृशानामिति बाढमवबुध्यमानोऽप्यहं विलुप्यमानस्य प्रबन्धस्यास्य पुनरुज्जीवनकुतूहलवशादनाकलितभाविपरिश्रमः प्रोत्साहितश्चेदंव्यवसायजीवातुभ्यां मदाश्रयभूताभ्यां महाशयाभ्यां श्रीमदप्पुशास्त्रिश्रीनिवासपिल्लैनामभ्यां प्रभुमणिभ्यां प्राविशमस्मिन्महति साहसे ।

(७) उभयोरनयोर्मदीयप्रवृत्त्युपघ्नयोरुत्साहमवलंब्य तयोस्साह्येनात्र व्यवसाये प्रथमतः प्रवृत्तं मामन्येऽपि महाशया महामहिमानो मठाधिपाः सहृदयाः प्रभवश्च प्रोत्साहयितुं व्यदधुर्विविधानुपकारान्मदुद्यमायेत्यतो धृतकार्तज्ञ्यस्तेषामव्याजसौहार्दाय, समर्पयामि तेभ्यो यथार्हं बह्वीर्विनतीराशिषश्च ।

(८) अनन्तरमिदंप्रबन्धमातृकासमन्वेषिणा मया काचन तालपत्रलिखिता शिवार्कमणिदीपिकाप्रतिकृतिराद्याधिकरणसमाप्तिपर्यन्ता श्रीकुम्भघोणस्थाय्यास्वामिशास्त्रिणां गृहकोशगता प्रथमं समासादिता । सा चात्र क. चिह्निता ।

(९) अनन्तरं श्रीमन्मधुरानगरश्रीमन्मीनाक्षीदेवालयस्थागमशास्त्रपाठशालाध्यापकस्य इदानीं लोकान्तरमुपगतस्य शांभवकुलशिखामणेर्गुरुमुखाभ्यस्तशिवाद्वैतमतप्रस्थानस्य शिवरामसुब्रह्मण्यशास्त्रिणस्सकाशादधिगता शिथिलशिथिला प्रथमाध्यायप्रथमपादसमाप्तिपर्यन्ता द्वितीयपादस्य गुहाधिकरणावसानेन कियतांशेन तथा आद्याध्यायतृतीयपादस्थदेवताधिकरणकतिपयसूत्रावधिकेनापूर्णेनातिशिथिलेनाल्पीयसा ग्रन्थेन च संयुतातिचिरत्ना काकिदरूपा नागराक्षरमयी काचन प्रतिकृतिरत्र च ख. चिह्नसंसूचिता अन्याच ग्रंथाक्षरलिखिता द्वितीयाध्यायोपक्रमप्रभृति तुरीयाध्यायसमाप्तिपर्यंता नवीनापि मध्ये मध्ये त्रुटितत्रिचतुरपदप्राचीनमातृकालब्धजननतया तत्प्रतिबिंबाकाराऽनतिशुद्धा काकितरूपा बृहती प्रतिकृतिश्चात्र सहादरमुररीकृता ।

(१०) अपरा च प्रतिकृतिरादिमाध्यायसमारंभप्रभृति गुहाधिकरणसमाप्तिपर्यन्ता काकिदरूपा नागराक्षरा नातिप्रत्नतनान्या च तालपत्ररूपा तावती चेति मातृकाद्वितयं तृतीयाध्यायतृतीयपादशेषप्रभृति तुरीयाध्यायसमाप्तिपर्यंतं तालपत्रात्मकं मातृकान्तरं चेत्येतत्त्रितयं श्रीमन्मध्यार्जुनक्षेत्रविराजमानश्रीमन्महालिंगेशादिव्यालयस्थापितपुस्तकालयस्थं तदध्यक्षेण इदमुद्यमप्रोत्साहकाग्रेसरपदवीमधिरूढेन तन्नासंस्थानमध्यविराज-

मान ( निरुवावडुतुरैनामक ) श्रीमद्गोमुक्तिक्षेत्रस्थितसुप्रसिद्धश्रीकैलासपरंपरागतनन्दिकेशाधिष्ठितशैवमठाधिपतिना श्रीमदंबलवाणदेशिकेन इदमुद्यमप्रोत्साहकरूप्यत्रिशतीरूपाग्रिममूल्यप्रदानपुरस्सरं मह्यं वितीर्णं ग. घ. चिह्नितं सादरमङ्गीकृतमत्रोद्यमे महोपकारकमभूत् ।

(११) अन्या च तालपत्ररूपा वटारण्यक्षेत्रा ( तिरुवालङ्गाडु ) भिजनश्रीमदप्पयदीक्षितेन्द्रवंश्यविद्वत्प्रकांडदुरूहशिक्षादिशांभवोत्कर्षप्रतिपादकमहाप्रबन्धप्रणेतृविश्वविख्यातविश्वनाथवाजपेयिगृहकोशगता तत्करांबुजपरिशीलिता आनन्दमयाधिकरणप्रभृतितृतीयाध्यायतृतीयपादकतिपयाधिकरणावसाना संपुटत्रितयात्मिका प्रायोऽनत्यबद्धतया महोपकारिणी प्रतिकृतिः विश्वनाथवाजपेयितनूजेन नीलकण्ठवाजपेयिना वितीर्णा ङ चिह्निता सहकार्तज्ञ्यमिदमुपयोगितया समादृता ।

(१२) नयमणिमालायाः प्रतिकृतिः काचित् श्रीमच्चंपकारण्य ( मन्नार्गुडी ) स्थश्रीमदप्पयदीक्षितेन्द्रवंशकमलाकरकलहंसमहामहोपाध्याय ( स्वर्गवासि ) त्यागराजमखिराजगृहकोशगता तालपत्ररूपा तत्पौत्रश्रीयज्ञस्वामिशास्त्रिसकाशादुपलब्धा ।

(१३) अन्या च पूर्वोक्त ( तिरुवालङ्गाडु ) श्रीमद्विश्वनाथवाजपेयिगृहकोशगता तत्पुत्रेण नीलकंठवाजपेयिना पूर्वनिर्दिष्टशिवार्कमणिदीपिकाप्रतिकृतिसंपुटैस्सह सादरं वितीर्णा ।

(१४) एताः प्रतिकृतीस्समासाद्य कांचित्प्रतिकृतिं विलिख्य परिशोध्य परिष्कृत्य च सहृदयानां सत्प्रभूणां साहाय्येन समासाद्य चादिमोपकरणभूतामर्थसंपत्तिमिदंमुद्रणोपक्रमपर्याप्तां मया संगृहीतां मतचतुष्टयार्थबोधिनीं सूत्रार्थचन्द्रिकां च तत्तदधिकरणसमाप्तौ संनिवेश्य संमुद्रच्य प्रकटयितुं प्रावृतम् ।

(१५) अस्य महतः प्रबंधस्य श्रद्धाजडशास्त्रानभिज्ञलेखककुलप्रमादकलुषिततया परिशीलनार्हपण्डितकुलगुरुशिष्यपरंपरापरामर्शहीनतया कालवशापतितात्यबद्धसंपातसमासादितरूपान्तरतया च शोचनीयावस्थामुपगतस्य परिशोधने धृतक्षणतामवलंब्य मामकसंशयनिराकरणेन तत्तत्समयेषु विहितोपकारेभ्यः सुगृहीतनामधेयमामकब्रह्मविद्यागुरुविश्वजित्सर्वतोमुखमहाव्रतयाजि श्रीमद्बालकृष्णमखिराजचरणेभ्यस्तथासेतुहिमाचलप्रसिद्धनामधेयश्रीमद्दीक्षितेन्द्रमहावंशपरंपरानवमपूरुषविशिष्टविद्वन्मण्डलचक्रवर्तिसर्वतंत्रस्वतंत्र ( भूत पूर्व ) श्रीमन्महामहोपाध्याय राजुशास्त्रिशब्दितत्यागराजमखिराजचरणांबुजसेवासमासादितनिरंकुशपाण्डित्याभ्यां हरिहरशास्त्रिगणपतिशास्त्रिभ्यां च धृतकार्तज्ञ्यस्सहादरमर्पयामि बहून्प्रणामान् ।

(१६) तथा मातृकापुस्तकप्रदानेन अग्रिममूल्यप्रदानादिप्रोत्साहनकर्मणा च मह्यमाहितमहोपकारेभ्यो नानादेशनिवासिभ्यस्सहृदयेभ्यस्सुहृन्मणिभ्यस्तेषामव्याजमैत्र्या आनृण्यमिदं जनुष्यनासाद्यमन्तरवधारयन्नर्पयामि चात्मविशुद्धये निष्क्रयतयासंख्येयान्प्रणामान् ॥

(१७) 'श्रेयांसि बहुविघ्नानी' तिप्राचीनाभाणकानुसारेण मध्येमध्ये समापतिताशारीरास्वास्थ्यादिद्रव्यकार्श्यान्ता विपदस्समुत्सार्येदमुद्यमनिर्वोढाखिलान्तर्यामीदं भाष्यप्रतिपाद्यः प्रपन्नार्तिभञ्जकः परमेश्वर एव विदध्यात्परिपूर्तिमवशिष्टस्येति दृढविश्वासस्सभ-

क्तिप्रकर्षमर्पयामि मन्निबद्धं वैद्येशशतकरूपं स्तुतिकुसुमाञ्जलिं मामककुलदैवताय प्रतिदिनम् ।

(१८) अन्यच्च किंचिदिदमुद्यमशिवंकरमिदंप्रथममितिवृत्तमस्ति विज्ञाप्यं सहृदयेषु, यत्किल तृतीयसंचिकासंमुद्रणसमयसमापतितमामकशारीरास्वास्थ्यरूपप्रत्यूहनिरसनाय सभक्तिकं स्तुतिकुसुमैरभ्यर्चितस्य भगवतो भक्तार्तिहन्तुर्वैद्येश्वरस्य करुणाबलेन समधिगतोल्लाघभावस्य द्रव्यसाह्यप्रतीक्षिणो मम प्रणाथिकामवलोक्य संप्रसन्ना अस्माककरुणार्णवभारतखण्डचक्रवर्तिप्रतिनिधिमहासंस्थानप्रभृतिराजकीयसंस्थाननवकाधिपतयो व्यदधुः पुस्तकक्रयणेन विपुलं द्रव्यसाहाय्यमिति । तथा तामेव रीतिमनुसृत्य व्यतन्वन्महत्साह्यं बरोडामहासंस्थानमहाराजप्रभृतयो महापुरुषा इति च ।

(१९) अन्यच्चेदमविस्मरणीयं कदापि मया पारितोषिकतया रूप्यद्विशतीप्रदानरूपं तञ्जासंस्थानमध्यविलसत्तालवनक्षेत्र ( तिरुप्पनन्दाल् ) स्थित शैवमठाधिपतिना काशिवासिसोमसुन्दरतम्बिरान्प्रभुणा विहितं कालिकं साहाय्यम् ।

(२०) यद्यपि केचित्प्रभव आश्रुत्यापि हस्तलेखेनाग्रिममूल्यप्रदानमगणयन्तः प्रतिज्ञाभङ्गं मध्येऽसकृदभ्यर्थिता अपि जोषंभावमुपगम्य न प्रासीदन्नात्मनः प्रतिज्ञां निर्वोढुम् । तथाप्यहमवलंब्याहार्यं धैर्यमशिथिलोत्साह एव निर्वहन्नस्मि समारब्धां मुद्रणधुराम् । दिष्ट्या चेयता कालविलंबेनापि 'प्रारब्धमुत्तमगुणा न परित्यजन्ति' इति न्यायानुरोधेनोत्तमगुणताधिगमलोभेनाविरतोद्यमो निरवीवृतमादिमाध्यायस्य संपूर्णग्रन्थत्रिभागात्मकस्य मुद्रणसमाप्तिम् । इतः परमवशिष्टस्याध्यायत्रितयात्मकस्याप्यणीयसो भागस्य संमुद्रणमचिरान्निर्वाह्यमनतिप्रयासेनेति संधुक्षितोत्साहोस्मि सांप्रतम् । इतः परमपि वा ते मयि जातप्रत्यया वितनुयुः साहाय्यमवशिष्टमुद्रणोपयोगितया प्रसीदन्तः प्रतिज्ञानिर्वहण इति विश्वसिमि ।

(२१) इदं भाष्यप्रथमाध्यायात्मकप्रथमसंपुटेन सहैव दिष्ट्या समाप्तमुद्रणा श्रीमच्छ्रीकण्ठभाष्यप्रस्थानानुरोधिनी अधिकरणकतिपयसिद्धांतनिर्णयरूपा श्रीमदप्पयदीक्षितकृतिश्चन्द्रिकाख्यव्याख्यासहिता आनन्दलहर्यपि समाह्लादयति नयनपदवीं सहृदयानामिति मोमोत्ति मे मानसम् ।

(२२) एवमेवेदंभाष्यद्वितीयसंपुटेन सह संमुद्रय प्रकटीचिकीर्षिते श्रीमदप्पयदीक्षितकृतिः शिवाद्वैतविनिर्णयाख्या रत्नत्रयपरीक्षा चेति कृतिरत्ने अपि विधास्यतः सहृदयमनःप्रमोदमिति निवेदये सहृदयान् ।

(२३) चिराय मया संगृहीतं श्रीमदप्पयदीक्षितेन्द्रचरितमपि प्रथमसंपुटोपोद्घात एव निवेशनीयमित्युद्दिष्टं तथापि तत्परिष्कृतेः कालविलंबसापेक्षतया सांप्रतमप्राप्तावसरतया च मम ग्रन्थसमाप्तेः परं द्वितीयसंपुटभूमिकायां प्रकटीकरिष्यामीति निवेदये सुहृदः ।

(२४) यद्यपि सावधानेन मयायं प्रबन्धो मुद्रणकालेऽसकृत्संशोधित एव, तथापि नात्र स्यादशुद्धिः कियत्यपीति वक्तुं न प्रभवति मे जिह्वा । यतः प्रौढस्यास्य प्रबन्धस्य प्रतिकृतीनामत्यबद्धकदर्थितत्वादुररीकृतबहुव्यवसायतयानवाप्तचित्तैकाग्र्यस्य मम व्युत्पत्तिमांद्यादिदोषवशाच्चाक्षरच्युतिमात्राच्युतिवर्णविपर्ययादयो दोषाः क्वचित्क-

चिदपरिहार्या एव समापतन्निति जानन्नपि ते दोषा इदंग्रन्थपरिशीलनालंकर्मीण-
धिषणानां विदुषां सुबोधा इत्यतो नायूयुजं शुद्धाशुद्धपत्रीमिति विज्ञेयं विद्वद्भिः ।

(२५) यदीऽतोऽपि ये केचिन्मदीयव्युत्पत्त्यगोचरा वाक्यार्थविपर्यासका पदवाक्यपङ्क्तिपातादयो महान्तो दोषा दृश्येरन्नसंशोधितास्तानन्विष्य करुणया मां निवेदयितुमाहिताञ्जलिरभ्यर्थये विद्वन्मणीन्कारुणिकानावेदये च तान्दोषान्ग्रन्थावसाने प्रकटीचिकीर्षुरस्मीति ।

जीर्णालयोद्धरणधर्मतोऽपि गरीयस्यत्र विलुप्तप्रबन्धपुनरुज्जीवनरूपे महति व्यवसाये प्रवृत्तमविरतोद्यमं मामनुगृह्णन्त्वाशीर्भिरविरहितफलाभिरार्यमिश्रास्सहृदया अकामोपनतं कालविलंबादिदोषं च मामकं मर्षयन्तु चेति पुनः पुनरभ्यर्थये ।

इदमारंभकालादारभ्येयन्तं कालं समारब्धस्य विपुलद्रव्यव्ययसाधनीयस्य समुद्यमस्य विलंबसाध्यतां, मुद्रणशालाऽस्वातन्त्र्यं, दवीयसो मुद्रणस्थानात्परिशोधनाय द्विस्त्रिर्यथासंभवं मुद्रितप्रतिकृतिपत्रिकागतागतप्रयासं, तन्मूलकमपरिहार्यं समयातिपातम्, अतिशिथिलमातृकात्रुटितवर्णराजिशुद्धीकरक्लेशं कालिकद्रव्यसंपत्तिराहित्यं पुरोभागिजनसर्वतो मुखवचनवागुरायास्सर्वपथीनतां चोत्साहसंतक्षणपटीयसीं, ध्यायंध्यायमन्तस्संतप्यमानहृदयोऽपि 'न सुखाल्लभ्यते सुख' मितिन्यायेन श्रेयसः क्लेशसाध्यतामवधारयन्ननुज्झितधैर्यस्संप्रति दिष्ट्या चिरात्प्रतीक्षितमाश्रितजनकामधेनुं श्रीमत्परमहंसपरिव्राजकेत्यादिविरुदालंकृतवैदिकधर्मपरिपालकमहामहिमशालिशृंगगिरिस्थश्रीमज्जगद्गुरुसच्चिदानन्दशिवाभिनवनरसिंहभारतीस्वामिसानुग्रहकरुणापांगनिक्षेपसंप्रसादमधिगम्य शिशिरितान्तःकरणस्समर्प्य च महामहिम्नि सद्गुरुसंनिधाने सकलं कर्मभरं तत्करुणया समुदञ्चितधैर्यो द्विगुणीकृतोत्साहश्चास्मीत्यमुमिदमुद्यमकुशलाङ्कुरं भव्योदन्तमात्तप्रमोद आवेदये श्रद्धालून्व्याजसुहृदस्सहृदयानिति शिवम् ॥

इत्थं सहृदयचरणांबुजदासः

रा० हालास्यनाथशास्त्री.

---

## EDITOR'S PREFACE.

This work forms the first of the two volumes of *Sivârkamanidipika*, *Appayya Dikshita's* famous commentary on *Srikanta's Bhasya* on the *Brahma Sutra. Shrikanta's Bhasya*, it may be mentioned, constitutes the interpretation of the ancient Brahma Sutras from the Saiva stand-point.

The publication of this work was undertaken with a special object and the immensity of the task had been too much for the unaided labour and resources of any one individual in the position of the editor but for the eagerness with which the publication was greeted by the public at large, and the active encouragement extended by private munificence and State Assistance. *Srikanta Bhasya*, with the lucid commentary

of *Appayya Dikshita*, has not been printed before, and the danger was apprehended that in a few years the available Mss. may completely wither away. Though the existing Mss. were mostly motheaten and scattered in isolation and oblivion all over India, the editor resolved to spare no pains in collecting the available Mss. and by printing it has sought to give a permanent form to a work which threatened to disappear from the Literary and Religious world which could ill afford to lose it. In this stupendous undertaking the editor was encouraged by substantial assistance from such patriotic gentleman like Rao Bahadur *S. Appu Sastriar* of Kumbakonam, himself a descendant of Appayya Dikshit, and Mr. *K. S. Sriniwas Pillay* of the *Tanjore* Bar. And with gratitude the editor acknowledges the kind help extended by the Government of *India*. The Colonial Govenment of *Ceylon*, the Local Governments of *Madras, Bombay, Bengal, The Punjab, Eastern Bengal & Assam, the Central Provinces* and *the United Provinces, H. H. The Maharajah* of *Mysore, H. H. The Maharajah Gaekwar, H. H. The Maharajah* of *Benares, H. H. The Maharajah of Durbanga, His Holiness Jagadguru Mahaswami* of *Sringeri* Mutt. The Editor's thanks are also due to the late *Shivarama Subramanya Sastriyar* of Madura, *Nilakanta Vajapeyar* of Thiruvalangadu and *Rao Bahadur Ayyasami Sastriar* of Kumbakonam who were so kind as to lend their Mss. and also to *Srila Sri Ambala vana Desikar,* Pandara Sannadhi of *Thiruvavaduthurai* Adhinạm who assisted the Editor with his well-known munificence and rare Mss.

The second and last volume is now in print and the Editor entertains the hope that it will be successfully carried through with greater expedition than was possible with the first volume, now that its publication is vouchsafed by the holy auspices of *His Holiness Mahaswami* of Sringeri Mutt.

---

## श्रीकण्ठीयब्रह्ममीमांसासूत्रभाष्यप्रथमाध्यायपादाधिकरणानां संग्रहेण विषयसूचिनी ॥

तत्र प्रथमाध्याये निखिलवेदान्तवाक्यानां तदनुगुणस्मृतीतिहासानां च तात्पर्येण ब्रह्मणि समन्वयः प्रमेयस्वरूपम् पतिपाद्यते ॥

प्रथमपादे, स्पष्टलिंगवाक्यविचारः,
द्वितीयपादे, अनतिस्पष्टलिंगवाक्यविचारः,
तृतीयपादे, स्पष्टास्पष्टलिंगवाक्यविचारः
चतुर्थपादे, अस्पष्टलिंगवाक्यविचारश्च क्रियते ।

इत्थं समन्वयाध्यायगताधिकरणाश्रयाः ।
श्रीमच्छ्रीकण्ठभाष्यस्य प्रमेयार्थाः प्रदर्शिताः ॥

॥ श्री शिवार्कमणिदीपिकाकाराणां दीक्षितेन्द्राणां भगवत्पादश्रीकण्ठभाष्ययोः सामरस्यनिरूपणं ॥

शिवार्कमणिदीपिकारंभे—

यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा
साकं सर्वैः पुराणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः ।
तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शंकराद्यैस्तदेव ॥

तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।
अद्वैतवासना पुंसां आविर्भवति नान्यथा ॥

इत्युक्तम् । अत्र सूचितस्यैवार्थस्य विस्तारः दीक्षितेन्द्रैः विरचितायां आनन्दलहर्या तद्व्याख्यायां चन्द्रिकायां च दर्शितयते । विद्यार्थिनां आनुकूल्याय स विस्तारः इह उद्घाह्रियते ॥

ननु, शुद्धाद्वैत एव सर्वेषां वेदान्तानां पुराणाद्युपबृंहणानाञ्च महातात्पर्यम् । ब्रह्मसूत्राण्यपि विचार्यमाणानि तत्रैव तात्पर्येण पर्यवसानवन्ति । यथा चैतत्तथास्माभिश्शङ्करभगवत्पादनिरूपितेन प्रकारेण न्यायरक्षामणौ समर्थितम् । तथाभूतं शुद्धाद्वैतं त्यक्त्वा किमिति विशिष्टाद्वैतं भाष्यकारैराश्रितम् । न हि यथाकथञ्चिदद्वैतसमर्थनमात्रेण वेदान्तानां सन्तोषः । किं तु स्वकीयमहातात्पर्यविषयाद्वैतनिरूपणेनैवेत्याशंक्याह—

शुद्धाद्वैते हि सर्वश्रुतिशिखरगिरामागमानाञ्च निष्ठा
साकं सर्वैः पुराणस्मृतिनिकरमहाभारतादिप्रबन्धैः ।
तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति
त्यक्तं तद्भाष्यकारैरिह कथमिति चेन्नैव तत्त्यक्तमार्यैः ॥ १ ॥

कथं न त्यक्तमित्याकाङ्क्षायां तदुपपादयति—

उक्ता खल्वत्र मुक्तिर्गतिमुपरि विना निर्गुणोपासकानां
जीवाभेदावलम्बा सगुणपरशिवोपासनाप्यत्र भाष्ये ।
सत्ताप्रत्यक्षबुद्धेर्जगति च विषयो वर्णितस्सत्यतान्यः
शुद्धं ब्रह्माद्वितीयं मतमिति बहुधाविष्कृतं तावदेवम् ॥ २ ॥

अस्मिन्भाष्ये 'अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्यां' इ (ब्र. ३. ३. ३२. सू) त्यधिकरणे 'सर्वेषां ब्रह्मोपासकानामर्चिरादिगतिस्साधारणी न तु केषाञ्चिदेवेति ऽयवतिष्ठते' इत्यधिकरणार्थं प्रदर्श्य तदनन्तरं 'केचिदाहुः अनियमस्सर्वेषामुपासकानामर्चिरादिगतौ नियमाभावस्तथा सति श्रुतिस्मृतिभ्याम-विरोधः' इत्यर्चिरादिगतेस्सर्वब्रह्मोपासकसाधारण्याभावमेव सूत्रार्थतया केचन योजयन्तीत्युक्त्वा 'तत्रापि न दोषः। निरन्वयोपासकानां तदपेक्षाभावात्' इति निर्गुणोपासकानामर्चिरादिगत्यनपेक्षाहेतुना स्वयं तदुपपादनं कृतम्। 'तदापीतेस्संसारव्यपदेशात्' (ब्र. ४. २, ८. सू) इत्यधिकरणे सर्वेषां ब्रह्मोपासकाना-मपि शरीरपातसमये प्राणानां जीवाविश्लेषेणोत्क्रान्तिरस्ति। तत्पूर्विका गतिश्चेति सिद्धान्तप्रदर्शनार्थं प्रवृत्ते 'अर्चिरादिना तत्प्रथितेः' (ब्र. ४. ३. १. सू) इत्यधिकरणे सर्वेषां ब्रह्मोपासकानामर्चिरादि-गतिरेकैव न तु मार्गान्तरमस्तीति निर्णयार्थं प्रवृत्ते च निरन्वयोपासकानां नोत्क्रान्तिर्नाप्यर्चिरादिगतिः' इत्येतन्मतान्तरमुपन्यस्तम्। एवं यत्रयत्र गत्युत्क्रान्त्योस्सर्वोपासकसाधारण्योक्तिः प्रसक्ता तत्र सर्वत्रापि निर्गुणोपासकसाधारण्यशंकापरिहारार्थमस्य मतस्योपन्यासात् स्वयं तदुपपादनाच्चास्य स्वाभिमतत्वमुन्नीयते। तथा 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्य (ब्र०. ४. १. ३. सू.) धिकरणे सगुणब्रह्मोपासनापि जीवाभेदविषयेति व्यवस्थापितम्। तादर्थ्येनैव तदधिकरणं प्रवर्तितम्। तथा जन्माधिकरणारंभाधि-करणयोः 'सन् घटः' इत्यादिप्रत्यक्षस्य प्रपञ्चसत्यत्वविषयत्वं परिहृत्य 'मृद्घटः' इत्यादिप्रत्यक्षवदुपादानता-दात्म्यविषयत्वं प्रदर्शितम्। एवमादिभिः बहुभिः प्रकारैर्जीवाभिन्नं निष्प्रपञ्चं ब्रह्मेति भाष्यकारैश्शुद्धाद्वैतं स्वाभिमतत्वेनाविष्कृतमेव। न तु तत्त्यक्तमित्यर्थः॥ १॥

अत्रैव गमकान्तराण्युदाहरति—

चिच्छक्तिं ब्रह्मणो यत्सकलचिदचिदाकारशालिस्वरूपां
सत्तां तस्य स्वरूपं यदपि गुणगणं यच्च तन्निर्विकारम्।
आचार्याः प्रोचुरेतैर्दृढम् गमितं निर्विशेषं तदिष्टं
जीवास्तेनैक्यभाजो वियदनिलमुखास्तद्विवर्ता इतीदम्॥ ३॥

इह भाष्ये ब्रह्मणश्चिच्छक्तिं सकलचेतनाचेतनप्रपञ्चाकारापन्नस्वरूपां तामेव ब्रह्मणः स्वरूपभूतां शिवशंभुशंकरा-दिसकलनामधेयप्रवृत्तिनिमित्तपर्यंततदीयनिखिलगुणगणात्मिकां ब्रह्म च निर्विकारमाचार्याः प्रतिपाद-यामासुः। तद्यथा—प्रथमसूत्रभाष्ये तावत् 'ततस्सकलचिदचित्प्रपञ्चाकारपरमशक्तिविशिष्टाद्वितीयवैभवस्य सकलनिगमसाररहस्यनिधानस्य भवशिवशर्वपशुपतिपरमेश्वररुद्रशंभुप्रभृतिपर्यायवाचकशब्दसारप्रकाशितपरम-महिमविलासस्य स्वशेषभूतसकलचेतनसमुपासनानुगुणसमुदितनिजप्रसादसमर्पितपुरुषार्थसार्थस्य परब्रह्मण प्रतिपादकमुपनिषच्छास्त्रं विचारणीयम्' इति शक्तेस्सकलचेतनाचेतनप्रपञ्चाकारत्वमुक्तम्। तथा जन्मादिसूत्र भाष्ये 'निखिलजगदण्डपण्डबुद्बुदानकुटुम्बजलधिस्थानीया परप्रकृतिरूपा परमशक्तिर्हि चिदंबरमुच्यते। तत्स्वरूपं ब्रह्माकाशशरीरम्' इति ईक्षत्यधिकरणभाष्ये 'स्थूलसूक्ष्मचिदचित्प्रपञ्चरूपशक्तिविशिष्टः परमेश्वर एव

कार्यकारणरूपसत्पदविषय, इति आरंभणाधिकरणभाष्ये 'स्वाभिन्ननामरूपविभागानर्हसूक्ष्मचिदचिद्रूपपरशक्तिगर्भितो हि शिवः केवलो भवति। पुनः स्वात्मिकां तादृशीं शक्तिं पूर्वदशाविरोधिस्थूलत्वयुक्तनामरूपविभागार्हचिदचिद्रूपां बहिर्विस्तारयति, इति च ब्रह्मशक्तेस्सकलचेतनाचेतनप्रपञ्चाकारत्वमुक्तम्। एवमन्येष्वपि बहुषु प्रदेशेष्वयमर्थ उद्घोषितः। तथा शक्तेर्ब्रह्मस्वरूपात्मकत्वम् 'ईक्षतिकर्मव्यपदेशात्सः। (ब्र.१.३.१२ सू.) इत्यधिकरणे वर्णितम्। तत्र हि 'एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोंकारः' इत्यादिसत्यकामप्रश्नोत्तरसन्दर्भे एकमात्रप्रणवोपासनस्य तत्प्रथममात्रात्मकऋक्प्रापणीयमनुष्यलोकप्राप्तिफलं द्विमात्रप्रणवोपासनस्य तद्द्वितीयमात्रात्मकयजुःप्रापणीयान्तरिक्षलोकप्राप्तिफलञ्चाभिधाय यदाम्नायते 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इति। तत्र ब्रह्मलोकः परब्रह्मणश्शिवस्य लोकस्तस्मिन्निरीक्षणीयः पुरुषश्शिव इति सिद्धान्तेऽभिमतः। तदर्थमिह ब्रह्मलोको विष्णुलोकः 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्त' इत्युक्तार्थसंग्राहके तदनन्तरमन्त्रे 'तद्विष्णोः परमं पदम्' इति मन्त्रेण विष्णुलोके प्रतिपन्नस्य विद्वदनुभवविषयत्वस्य तस्मिन्ब्रह्मलोके प्रत्यभिज्ञायमानत्वात्। अतस्तस्मिन्निरीक्षणीयः पुरुषो विष्णुरेवेति पूर्वपक्षमुपन्यस्य सिद्धान्ते तदनुवादपूर्वकं तन्निरास इत्थं कृतः "यदुक्तं 'तद्विष्णोः परमं पदं' इति तत्र प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परमं पदं रूपं तदेव शिवाभिधेयं परंब्रह्मेत्यविरोधं यतो विष्णुशिवयोरुपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपभेदो नास्ति" इति। अत्र शिवलोके 'तद्विष्णोः' इति मन्त्रार्थप्रत्यभिज्ञानसंघटनार्थं तस्य मन्त्रस्य शिवलोकाविषयत्वमेव वक्तुं युक्तम्। न तु शिवविषयत्वम्। अत एव 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति मन्त्रस्य शिवलोकविषयत्वं 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र॰ ४॰ ३. ६.सू) इत्यधिकरणभाष्ये वर्णितम्। 'तद्विष्णोः' इति मन्त्रस्यैतद्भाष्यदर्शितार्थावलंबनेन शिवविषयत्वमुपपादयितुमप्यशक्यम्। न हि प्रपञ्चाकारेणावस्थितस्य विष्णोश्शिवस्साक्षात् स्वरूपमिति भाष्यकारसिद्धान्तः। किं तु शिवशक्तिरूपः परमानन्दस्तस्य साक्षात्स्वरूपमिति। तस्य शिवशक्त्यवस्थारूपत्वमेव हि प्रकृत्यधिकरणभाष्यादिषु प्रतिपादितम्। तस्मादित्थमस्य भाष्यस्यार्थो वर्णनीयः। 'प्रपञ्चाकारत्वमन्तरेण यन्निरतिशयानन्दस्वभावं विष्णोः परम पदं रूपम्' इत्यनेन जगदाकारपरिणतविष्ण्ववस्थाप्रकृतिभूता चिच्छक्तिरुच्यते। सैव परमशिवलोकतयापि वर्तत इति तेन 'तद्विष्णोः' इति मन्त्रस्य शिवलोकविषयत्वं दर्शितं भवति। 'तदेव शिवाभिधं परं ब्रह्म' इति तस्याश्शिवस्वरूपाभिन्नत्वमुच्यते। ननु प्रत्यभिज्ञानाविरोधसंघटनार्थं 'तद्विष्णोः' इति मन्त्रस्य शिवलोकाकारतापन्नचिच्छक्तिमात्रविषयत्वं वक्तव्यम्। चिच्छक्तेश्शिवस्वरूपाभिन्नत्ववचनं तु तत्र नोपयुज्यत इत्याशंक्य शंकाविशेषनिरासेन तदुपयोगं सूचयितुं 'यतश्शिवविष्ण्वोः' इत्यादिवाक्यम्। इयमत्र शंकोत्थितिः। विष्णोः परमं रूपं शिवशक्तिरित्ययुक्तम्। पुराणेतिहासादिषु विष्णोश्शिवाभिन्नत्वस्यैव बहुधा प्रतिपादितत्वादिति। तत्रायं परिहारोऽनेन वाक्येन सूचितः। यतो विष्णोश्शिवात् स्वरूपभेदो नास्ति तत एव विष्ण्ववस्थाप्रकृतिभूतायाः शक्तेरपि शिवात्स्वरूपभेदो नेष्यते। कूर्मपुराणादिषु शिवस्य शक्तेर्विष्णोश्चैक्यप्रतिपादनदर्शनात्। कूर्मपुराणे—'दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च। प्रणम्य देवमीशानं पृष्टवत्यो वराङ्गनाः। कस्त्वं विभ्राजसे

कान्त्या केयं बाला रविप्रभा । को न्वयं भाति वपुषा पङ्कजायतलोचनः । निशम्य वचनं तासां वृषेन्द्रवरवाहनः । व्याजहार महायोगी भूताधिपतिरव्ययः । अयं नारायणो देवी जगन्माता सनातनी । विभज्य संस्थिता देवी स्वात्मानं बहुधेश्वरम् । न मे विदुः परं तत्त्वं देवाद्या न महर्षयः । एकोऽहं वेद विश्वात्मा भवानी विष्णुरेव च । अहं हि निष्क्रियो धाता केवलो निष्परिग्रहः । मामेव केवलं देवमाहुर्देवीमथाम्बिकाम् ॥' इत्यादिषु बहुषु प्रदेशेषु शिवस्य शक्तेर्विष्णोश्चैक्यं प्रतिपादितम् । यत्तु 'त्रिविधां भावनां ब्रह्मन्प्रोच्यमानां निबोध मे । एका मद्विषया तत्र द्वितीयाऽव्यक्तसंश्रया । अन्या तु भावना ब्राह्मी विज्ञेया सा गुणातिगा । आसामन्यतमां वापि भावनां भावयेद्बुधः । अशक्तस्संश्रयेदाद्यामित्येषा वैदिकीश्रुतिः' इतीन्द्रद्युम्नं प्रति भगवद्वचने 'योगी च त्रिविधो ज्ञेयो भौतिकस्सांख्य एव च । तृतीयोऽत्याश्रमी प्रोक्तो योगमुत्तममाश्रितः । प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना । तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी' इत्युत्तरोत्तरोत्कृष्टत्रिविधयोगिसंन्यासिविभागे च विष्णुशक्तिशिवभावनानामुत्तरोत्तरोत्कृष्टत्वमुक्तम् । यच्चेन्द्रद्युम्नस्य बहुकालं नारायणमुपासितवतः 'संप्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्विकाम् । अवाप परमं योगं येनैकंपरिपश्यति । यं विनिद्रा जितश्वासाः कांक्षन्ते मोक्षकाङ्क्षिणः ।' इति तदनन्तरमक्षरशब्दोक्तशक्त्युपासनपूर्वकेन परमेश्वरोपासनेनाद्वितीय ब्रह्मसाक्षात्कारोपयोगितन्निदिध्यासनानुष्ठानमुक्तम् । तेन सर्वेषाप्येकस्यैव परब्रह्मणश्शिवशक्तिविष्णुरूपेण स्थितस्य तेन तेन रूपेणोपासनामात्रस्य फलभेदेन भेदस्सिध्यतीति नैतावता तेषां परस्परभेदः शङ्कनीयः । एवमादिरूपुराणादिष्वपि तेषामैक्यप्रतिपादनमुदाहर्तव्यम् । एवं तावत् 'तदेव शिवाभिधेयं परं ब्रह्म' इति ईक्षतिकर्माधिकरणभाष्येण शक्तेश्शिवस्वरूपात्मकत्वमुक्तम् । तथा शक्तेश्शिवस्वरूपात्मकत्वं तदीयसकलगुणगणरूपत्वञ्च 'सर्वत्र प्रसिद्धोपदेशात्' इत्यधिकरणभाष्ये प्रपञ्चितम । श्रुतिस्मृतीतिहासपुराणाभियुक्तसूक्तिप्रामाण्यात् सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासंविदानंदसत्ता देशकालादिपरिच्छेदशून्या स्वाभाविकी परमशक्तिः परब्रह्मणश्शिवस्य स्वरूपञ्च गुणश्च भवति तद्व्यतिरेकेण ब्रह्मणस्सर्वज्ञत्वसर्वशक्तित्वसर्वनियन्तृत्वसर्वोपास्यत्वसर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्वगतत्वञ्च नं संभवति । किञ्च, महेश्वरशिवमहादेवरुद्रादिपरमाख्यानामभिधेयत्वञ्च न संभवतीति । परब्रह्मणो निर्विकारत्वं प्रकृत्यधिकरणे शंकोत्तराभ्यां प्रपञ्चितम् । तत्र हि 'नन्वज्ञानविकारापदेयप्रपञ्चरूपेण प्रकृतिभावेन कथं वर्तते निरस्तसमस्तदोषकलंको निस्सीममंगलगुणरत्नाकरो निरंकुशनित्यसिद्धवैभवः प्रपञ्चातीतः परमशिवः' इत्याशंकोत्तरत्वेनावतारितस्य 'परिणामात्' इति (ब्र. १. ४. २६.) सूत्रस्य व्याख्यानावसरे 'नित्यशुद्धानन्दस्य निरतिशयमंगलस्वभावस्यापि निमित्तस्य परमशिवस्य प्रकृतित्वेन जगदाकारत्वं युक्तमेव चिदचिदाकारेण परिणामात्' इति सौत्रहेतुवचनस्य शब्दार्थं प्रदर्श्य 'हन्त कारणविकाररूपो हि परिणामः पूर्वरूपपरित्यागेन रूपान्तरापत्तिः परिणाम इति कथं परमेश्वरोऽनर्थधर्मात् परिभूयते' इति तत्र शंकामुद्भाव्य 'यथा निमित्तस्य प्रकृतित्वेऽपि न विकारादिस्पर्शः, तथा परिणामस्संभवति' इति गूढाभिसन्धितयोत्तरमुक्त्वा 'कोऽयमपूर्वः परिणामः कुतूहलिनो वयं तच्छ्रवणे विविच्यताम्.' इति पुनराकांक्षामुद्भाव्य 'शृणु विवेचयाम' इति तदुत्तरोक्तिं प्रतिज्ञाय 'यदातमो' मन्त्रार्थविवरणपूर्वकं शिवस्य परब्रह्मणः प्रज्ञारूपचिच्छक्तिद्वारकः परिणामस्स तु न स्वरूपतो निर्वि

कारत्वस्य विरोधीत्युक्तम्। एवं जन्मादिसूत्रभाष्यादिष्वपि ब्रह्मणो निर्विकारत्वमुक्तं द्रष्टव्यम्। इत्थंभूतैराचार्यवचनैर्ब्रह्म वस्तुतो निर्गुणमेव तेषामभिमतं जीववर्गस्तदभिन्नो गगनपवनादिजडवर्गस्तद्विवर्त इत्येव निर्गुणं जीवाभिन्नं निष्प्रपञ्चं शुद्धाद्वैतरूपं ब्रह्म तेषां मतमिति दृढमवगमितम्। चिच्छक्तेर्ब्रह्माभेदे तदीयसकलधर्मरूपत्वे च ब्रह्म हि वस्तुतः स्वव्यतिरिक्तधर्मरहितं निर्धर्मकमित्येव सिध्यति। तथा सकलचेतनप्रपञ्चाकारायाश्चिच्छक्तेर्ब्रह्माभेदे चेतनवर्गस्यापि तदभेदास्सिध्यति। ब्रह्माभिन्नायाश्चिच्छक्तेस्सकलचेतनप्रपञ्चाकारत्वस्याभ्युपगमेऽपि ब्रह्मणस्तदभेदो न सिध्यति। तस्या नित्यवियदादिप्रपञ्चाकारताभ्युपगमे निर्विकारत्वाभ्युपगमविरोधापत्तेः। किञ्च प्रपञ्चस्य ब्रह्मविवर्तत्वमेव सिध्यति। न च ब्रह्मचिच्छक्त्योस्तात्त्विकाभेदेऽपि गार्गिब्राह्मणदहरविद्यानन्दवल्ल्यादिसिद्धस्य धर्मधर्मिभावासनासानिभावादिकृतभेदव्यपदेशस्याप्यवश्याभ्युपगन्तव्यत्वादद्वैतवादे जीवब्रह्मणोरभेदेऽपि व्यावहारिकभेदाभ्युपगमेन कर्तृत्वभोक्तृत्वतदभावव्यवस्थावत् ब्रह्मचिच्छक्त्योर्निर्विकारत्वसविकारत्वव्यवस्था सिध्यति, अतो न ब्रह्मनिर्विकारत्वाभ्युपगमेन प्रपञ्चस्य ब्रह्मविवर्तत्वसिद्धिरिति वाच्यम्। तथापि परमुक्तिदशायां व्यावहारिकभेदनिवृत्त्या जीवगतकर्तृत्वभोक्तृत्वादिवत् चिच्छक्तिगतजडप्रपञ्चस्यापि निवृत्तेरवश्यवक्तव्यत्वेन ब्रह्मविवर्तत्वासिद्ध्यनिवारणात्। चेतनप्रपञ्चस्य तु जडप्रपञ्चवद्ब्रह्मविवर्तत्वं न सिद्ध्यति। तथात्वे तस्य मुक्तिफलभावत्वाभावप्रसंगात् नित्यस्य तस्य ब्रह्माभेदे ब्रह्मनिर्विकारत्वबोधाप्रसंगाच्च। एवञ्च ब्रह्माद्वैताभ्युपगमविषये शंकरभगवत्पादीयमतादाचार्यमते न कश्चिद्विशेषः। तन्मतेऽपि हि ब्रह्मणश्चैतन्यरूपा जगदाकारपरिणामिनी चिच्छक्तिस्तावदस्ति। 'चिच्छक्तिः परमेश्वरस्य विमलं चैतन्यमेवोच्यते तस्यैवास्य जडापरा भगवतश्शक्तिस्त्वविद्यात्मिका। संसर्गाच्च मिथस्तयोर्भगवतश्शक्त्योर्जगज्जायते सच्छक्त्या सविकारया भगवता चिच्छक्तिरित्युच्यते॥' इति संक्षेपशारीरकोक्तेः। सा च न ब्रह्मव्यतिरिक्ता व्यावहारिकभेदमात्रवती। तदनन्तरमेव 'इत्येवं कथयन्ति केचिदपरे श्रद्धालवस्तत्पुनः कस्याश्चिद्भुवि सम्मतञ्च विदुषां नेष्टञ्च भूम्यन्तरे। कर्मोपास्तिविधानभूमिषु तथातत्संमतं निर्गुणे तत्त्वे तत्परवेदवाक्यविषये स्वालोचिते नेष्यते' इति संक्षेपशारीरकोक्तेः। तथा तन्मतेऽपि ब्रह्मणो धर्मास्सन्ति व्यवहारदशायां पृथग्भूताः। 'आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इति पञ्चपादिकोक्तेः। तथा तैरपि व्यवहारसिध्यर्थं प्रसक्तप्रतिषेधसिध्यर्थं च प्रपञ्चस्य परिणामिताभ्युपगमपूर्वकमेव विवर्त्ततापर्यवसानं कृतम्। यथोक्तं संक्षेपशारीरके 'आरम्भसंहतिविकारविवर्तवादानाश्रित्य वादिजनता खलु वावदीति। आरम्भसंहतिमते परिहृत्य वादौ द्वावत्र संग्रहपदं नयते मुनीन्द्रः॥ तत्रापि पूर्वमुपगम्य विकारवादं भोक्त्रादिसूत्रमवतार्य विरोधनुत्यै। प्रावर्त्तत व्यवहृतेः परिरक्षणाय धर्मादिगोचरविधावुपयोगहेतोः॥ साक्षादिहाभिमतमव विवर्त्तवादमाहत्य सूत्रयति पूर्वमुपेक्षमाणः। आरम्भणादिवचनेन विवर्तवादं शक्नोति वक्तुमुदिते परिणामवादे॥ आरुह्य भूमिमधरामितराधिरोढुं शक्नोति शस्त्रमपि कारणकार्यभावम्। उक्त्वा पुरा परिणतिप्रतिपादनेन संप्रत्यपोहति विकारमृषात्वसिद्ध्यै॥ विवर्त्तवादस्य हि पूर्वभूमिर्वेदान्तवादे परिणामवादः। व्यवस्थितेऽस्मिन् परिणामवादे स्वयं समायाति विवर्तवादः॥ उपायमातिष्ठति पूर्वमुच्चैरुपेयमाप्तुं जनता यथैवम्। श्रुतिर्मुनीन्द्रश्च विवर्तसिद्ध्यै विकारवादं वदतस्तथैव॥ अहं प्रजायेय बहु स्वयं स्यामित्यादिनादौ परिणाममुक्त्वा। विकारमिथ्यात्वमथ ब्रुवन्ती विवर्तवादं श्रुतिराननाय॥' इति॥ ३॥

अथ जीवानां ब्रह्माभिन्नत्वस्य जडानां ब्रह्मविवर्तत्वस्य चोपपादके सकलचेतनाचेतनप्रपञ्चाकारायाश्चि-च्छक्तेर्ब्रह्माभेदे भाष्यसंप्रतिपत्तौ गमकान्तरमुदाहरति—

आध्यानादिक्रियायां परमशिवपदं प्रेप्सतामान्तराणां
ध्येयत्वं वारयित्वा त्यजति विधिबलात्तद्विरोधप्रशान्त्यै ।
प्रागानन्दाधिकारे परमशिवमिव ध्येयमुक्तं विमुक्त्यै
चिच्छक्त्यात्मानमानंदमयममिदधुर्भाष्यकारास्तमेव ॥५०॥

अत्रेयं विषयशुद्धिः । 'आनन्दादयः प्रधानस्य' (ब्र.३.३.११.) इत्याधिकरणे 'यन्निरतिशयज्ञानानन्दादि-गुणजातं कृष्णपिंगळत्वविरूपाक्षत्वादिविशिष्टदिव्यमंगळविग्रहवैशिष्ट्यं च परब्रह्मणः स्वरूपलक्षणमिष्यते । तद्ब्रह्मविष्ण्वादिसकलेतरविलक्षणपरब्रह्मप्रतिपत्तये सर्वास्वपि विद्यासु प्रकरणभेदेऽप्युपसंहार्यम्' इति प्रसाध्य तदनन्तरं 'प्रियशिरस्त्वाद्यप्राप्तिः, इत्य (ब्र. ३. ३. १२. सू.) धिकरणे 'ब्रह्मधर्मनिरतिशयज्ञानोपसंहृतौ तद-वान्तरविशेषाणां सत्यसंकल्पत्वादीनामिवानन्दमयशब्दोक्तनिरतिशयानंदोपसंहारे तदवान्तरविशेषाणां प्रियशिरस्त्वादीनामप्युपसंहारः कार्य' इत्याशंक्य प्रियादीनामानन्दविशेषत्वेऽपि तेषां शिरस्त्वादेर्ब्रह्मानन्दगत-निरतिशयत्वप्रतिपत्तिसौकर्यार्थं कल्पितत्वान्न तेषामुपसंहार' इति प्रसाधितम् । तदनन्तरम् 'आध्यानाय प्रयो-जनाभावात्' (ब्र. ३.३.१४.सू.) इत्यधिकरणे कल्पितत्वात्प्रियशिरस्त्वादीनामननुसन्धेयत्वेऽपि अन्नमयादि-कोशचतुष्टयमनुसन्धेयम् । 'यो वेद निहितं गुहायाम्' इति श्रुतेः गुहारूपतदान्तरत्वस्यावश्यानुसन्धेय-त्वादित्याशंक्य अन्नमयादयो न शरीरप्राणमनोबुद्धिरूपा अचेतनाः किंत्वथर्वशिखायां 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्त' इत्युक्ता देवताविशेषाः 'एतमन्नमयमात्मानमुपसङ्क्रामति' इत्यादिफलवाक्येषु तेषां परब्रह्मप्राप्तेः पूर्वं क्रमप्राप्यचेतनत्वावगमात् । ते चाथर्वशिखायामेव 'शिव एको ध्येयः शिवङ्करस्सर्व-मन्यत्परित्यज्य' इति मुमुक्षुकर्तव्यनिरन्तरशिवविषयचिन्तासन्ततिरूपध्यानकाले परित्याज्यत्वेन ध्याना-द्बहिर्व्यावर्तनीयत्वेनोक्ताः । अतो यद्यपि 'ब्रह्मविदाप्नोति परम्' इति श्रुत्युक्तं फलं प्राप्नुवतोऽन्नमया-द्यनुसन्धानफलतया क्रमेण तेषां प्राप्तिः 'एतमन्नमयम्' इत्यादिवाक्येषु श्रूयते । तथापि शिवध्यानारम्भात् प्रागेव तेषामनुसन्धानं पूर्वपूर्वपरित्यागेन कार्यम् । 'सर्वमन्यत्परित्यज्य' इति श्रुतेः पूर्वपूर्वपरित्यागपूर्वकोत्तरोत्तरप्राप्तिरूपफलानुगुण्याच्च । पूर्वपूर्वपरित्यागश्च उत्तरोत्तरस्मिन् पूर्वपूर्वोपसंहारेण कर्तव्यः । तथा शिवागमेषु प्रसिद्धत्वात् योगयाज्ञवल्क्येऽपि ध्यानाध्याये ब्रह्मादीनां क्रमेणानुसन्धानं विधाय तदनन्तरम् 'एतदुक्तं भवत्यत्र गार्गि ब्रह्मविदां वरे । ब्रह्मादिकार्यरूपाणि स्वेस्वे संहृत्य कारणे । युक्तचित्तस्तदात्मानं योजयेत्परमेश्वरे ॥' इति तथैव प्रतिपादितत्वाच्च । एवञ्च क्रमेणान्नमयादीननुसन्दधानः पूर्वपूर्वमुत्तरोत्तरस्मिन् विज्ञानमयं शिवासनरूपे परमव्योम्नि च प्रलीनं भावयित्वा परमव्योममध्यवर्तिशिवैकविषयचिन्तासन्ततिरूपध्यानं कुर्यात् । अयमेव परित्यागश्रुत्यविरोधेन 'गुहायां निहितम्' इति श्रुत्या विवक्षितोऽर्थ इति सिद्धान्तितम् । तदनन्तरमेवं सत्युमासहायत्वमपि तस्य ध्यानकालेऽनुसन्धेयं न स्यात् । सर्वेतरपरित्यागविरोधात् 'सर्वमन्यत्परित्यज्य' इत्यन्यशब्देनैव प्रकृतब्रह्मविष्णुरुद्रेन्द्रग्रहणसंभवे अधिकस्य सर्वशब्दस्य शिवेतरसर्वदेवतापरित्यागविध्यर्थत्वात् । न चान्नमय-

शब्दोक्तचिच्छक्त्यात्मिकाया उमायाश्शिवाभिन्नत्वात् परित्यागविधेर्न तद्विषयत्वप्रसक्तिरिति वाच्यम्। 'अन्योऽन्तर आत्मा' इत्यादावन्नमयादिषु श्रुतस्यात्मशब्दस्यानन्दमयेऽप्यविशेषेण तद्वदानन्दमयस्यापि जीवत्वौचित्यात्। अन्यथात्मश्रुत्यविशेषेणान्नमयादीनामपि शिवाभेदप्रसङ्गादित्याशङ्कानिराकरणार्थं 'आत्मगृहीतिरितरवदुत्तरात्' ( . ३.३. १६. सू) अन्वयादिति चेत्स्यादवधारणा (ब्र. ३. ३. १७. सू) दिति तस्मिन्नेवाधिकरणे गुणसूत्रद्वयं कृतम्। आद्यसूत्रस्यायमर्थः, आनन्दमये आत्मग्रहणं परमात्मविषयम् 'आत्मन आकाशस्सम्भूत' इति जगत्कारणे आत्मग्रहणवत्। न त्वन्नमयादिष्विव जीवविषयम्। उत्तरसन्दर्भात्। उत्तरत्र ह्यन्नमयादिकमुपसङ्क्रान्तस्यैवानन्दमयमुपसंक्रान्तस्य उपसंक्रमितव्यान्तरोक्त्यभावेन तत्प्राप्तेर्मुक्तिरूपत्वमवगम्यते। तथा च जीवपरसाधारणस्यात्मशब्दस्य तत्र तत्र यथार्हमर्थग्रहणं युक्तम्। अत्रात्मशब्दस्य जीवविषयत्वं नियतं दृष्टमिति प्रायपाठाशंका तु 'इतरवत्' इति सौत्रपदेनैव निरस्ता। तस्मादुमायाः शिवाभिन्नत्वात् शिवध्यानकाले तदनुसन्धानं न विरुध्यत इति। नन्वेवमन्नमयादि-शब्दोक्तानां ब्रह्मादीनामपि पूर्वापरवाक्ययोः परमात्मपरतया क्लृप्तेनात्मशब्देनान्वयात्तेषामपि शिवध्यान-कालेऽनुसंधानं भवेदिति शंकानिराकरणार्थं द्वितीयसूत्रम्। तस्याप्ययमर्थः। 'अन्योऽन्तर आत्मानन्दमय' इत्यानन्दमयस्य शिवाभिन्नस्यान्नमयादिभ्यो भिन्नत्वावधारणात् अन्नमयादीनां शिवाभेदो नोपपद्यते। नन्वानन्दमयशब्दोक्तायास्सकलचेतनाचेतनप्रपञ्चाकारायाः शक्तेश्शिवाभेदेन तदभिन्नानां प्रकृतब्रह्मादि-शब्दोक्तचेतनानामपि शिवाभेदः स्यादेवेति तेषां परित्यागोक्तिरर्धजरतीयन्यायावलंबनैवेति चेन्न। 'सर्वमन्यत्प-रित्यज्य' इत्यवधारणदर्शनात्। तस्यावधारणस्य प्रकृतब्रह्माद्यविषयत्वे हि कस्तस्य विषयः स्यात्। नाचेत-नवर्गः प्रकृतब्रह्मादिव्यतिरिक्तचेतनवर्गो वा। अन्यशब्दस्य सर्वनामशक्तिस्वाभाव्येन प्रतियोगिभूतशिवसदृश-बुद्धिस्थब्रह्मादिचेतनपरत्वावश्यंभावात् चेतनान्तराणामपि ब्रह्मादिवत् शिवाभिन्नत्वेन तद्विषयत्वेऽप्यनुपपत्ति-तौल्याच्च। तस्माद्वस्तुतः शिवाभिन्नस्य चेतनस्य परित्यागोऽत्र न विधेयः। किं तु शिवात् भेदेन प्रतीयमानस्य अत एव ब्रह्मविद्यासु शिवोऽहमिति शिवाभेदेनानुसन्धेयस्य स्वात्मनो नं परित्यागः। अतः प्रतिपर्यायं 'अन्योऽन्तर आत्मा' इति श्रवणादन्नमयादीनां शिवात् परस्परस्माच्च भेदप्रतीतेस्तेषां परित्यागः। उमायास्तु यद्यपि 'परमे व्योमन्' इति 'स एको ब्रह्मण आनन्द' इति च भेदः प्रतीयते। तथाप्यासनरूपेण निरति-शयानन्दरूपेण च सा भेदप्रतीतिर्न त्वंबिकात्मकचेतनरूपेण। तेन तु रूपेणाभेद एव प्रतीयते 'पुरुषं कृष्ण-पिंगलम्' इत्यस्य सर्वविद्यासूपसंहृतेरानन्दाधिकरणे समर्थितत्वेन 'कृष्णपिंगलम्' इत्यनेन शिवस्यैवांबिका-मूर्त्या कृष्णवर्णत्वं पुरुषमूर्त्या रुक्मवर्णत्वमिति शिवशक्त्यभेदगर्भीकरणात्। तस्मादुमाया इवान्नमयादीनां शिवध्यान कालेऽनुसन्धानं न कार्यमिति। एवमिहानन्दमयरूपा चिच्छक्तिः परमात्मा शिव एव ततो न भिद्यते इत्याचार्यैः आत्मगृहीतिसूत्रार्थत्वेन वर्णितम्। न च तद्भाष्यमानन्दमयः परमात्मा शिव इत्यानन्दमयाधिकरणप्रथमपक्षमा-श्रित्यानन्दमयस्य परमात्मत्वसाधनपरं न त्वानन्दमयश्शक्तिरिति तदधिकरणद्वितीयपक्षमाश्रित्य शक्तेः परमात्मा-भेदसाधनमिति वाच्यम्। प्रथमपक्षाश्रयणे आनन्दमयः परमात्मेत्यस्यार्थस्यानन्दमयाधिकरण एव सिद्धत्वेन तत्र तत्साधनस्यानपेक्षितत्वादानन्दमयाधिकरणद्वितीयपक्ष एव भाष्यकाराभिमत इति जन्मादिसूत्रभाष्येण स्पष्टमवगतत्वाच्च। तस्मादाध्यानाधिकरणे भाष्यकारैश्शक्तेश्शिवाभेदः प्रसाधितः समञ्जस एव ॥ ४ ॥

अथ जीवब्रह्माभेदो भाष्यकाराभिमत इत्यत्र गमकान्तरमुदाहरति—

आचार्यास्तत्र तत्र व्यधुरधिकरणे पूर्वपक्षावलंबं
जीवब्रह्माविभेदप्रमितिकरवरैस्तत्वमस्यादिवाक्यैः ।
तत्सिद्धान्तेष्वकार्षुः कथमपि न पुनस्तत्र तात्पर्यभंगं
प्रत्याचख्युस्तमंशाधिकृतिकृतमथाहंग्रहाधिक्रियायाम् ॥ ५१ ॥

जीवब्रह्माभेदप्रमाणमूर्धन्यानि तत्त्वमस्यादिवाक्यानि केषुचिदधिकरणेषु पूर्वपक्षावलंबनत्वेन भाष्यकारैरुदाहृतानि । यथा—प्रथमाधिकरणे 'जीव एव ब्रह्म स च सर्वेषामसन्दिग्धाविपर्यस्तप्रत्यक्षानुभवसिद्ध इति तस्याविचारणीयत्वात् ब्रह्मविचारात्मकं शास्त्रं नारंभणीय'मिति पूर्वपक्षस्य, तृतीयपादाकाशाधिकरणे 'नामरूपनिर्वोढृत्वेन श्रुत आकाशो न भूताकाशो जीवो वा किंतु परमेश्वर' इति निर्णयार्थं प्रवृत्ते जीवातिरिक्तपरमेश्वराभावात् निर्विषयस्सिद्धान्त' इति पूर्वपक्षस्य 'सुषुप्त्युत्क्रान्त्योर्भेदेन । (ब्र. १. ३. ४३. सू.) पत्यादिशब्देभ्यः (ब्र. १. ३. ४४. सू.) इति गुणसूत्राभ्यां निवर्तनीयस्य, आरंभणाधिकरणे 'वेदान्तेषु जीवस्य ब्रह्मानन्यत्वव्यपदेशात् ब्रह्मणो जगत्स्रष्टृत्वांगीकारे स्वाभिन्नस्य जीवस्य जगत्सृष्टिर्हिता जगत्सृष्टिरहितेति जानतस्तस्य हिताकरणमहितकरणञ्च प्रसज्येते' ति पूर्वपक्षस्य 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' इति (ब्र. २. १. २१.) सूत्रेण उद्भाव्य 'अधिकं तु भेदनिर्देशात् (ब्र. २. १. २२. सू) अश्मादिवच्च तदनुपपत्तिः' इति (ब्र. २. १. २३.) सूत्राभ्यां निवर्तनीयस्य, पुरुषार्थाधिकरणे जीव एव ब्रह्मेति तद्‌ज्ञानस्य कर्तृसंस्कारद्वारा क्रत्वर्थत्वात् 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादितत्फलश्रवणं 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति दीक्षितांजनफलश्रवणमिवार्थवाद' इति पूर्वपक्षस्य 'शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः' इति (ब्र. ३. ४. २.)सूत्रेणोद्भाव्य 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' इति (ब्र. ३. ४. ८.) सूत्रेण निवर्तनीयस्य चावलंबनत्वेन पूर्वपक्षभाष्येषु महावाक्यान्युदाहृतानि। तत्तत्सिद्धान्तभाष्येषु तु तानि जीवब्रह्माभेदपराणि न भवन्ति किंतु 'ब्राह्मणो विद्वान्' इतिवदपृथक्सिद्धपराणि 'वाचं धनुमे' इतिवदुपासनापराणि वेति न काप्युक्तम् । यद्यपि 'अंशो नानाव्यपदेशात्' (ब्र. २. ३. ४२.सू)इत्यधिकरणे ब्रह्मैवोपाधिवशात् जीवभावमापद्यत इति पूर्वपक्षनिराकरणार्थं प्रवृत्ते "तत्त्वमसि' 'अयमात्मा ब्रह्म' इत्यादिकाद्यपदेशात् तयोर्जीवब्रह्मणोर्व्याप्यव्यापकभावेनानन्यत्वम्' इति सिद्धान्तभाष्येण योगिशरीराणां व्यापनीयानां तद्व्यापकस्येव योगिनश्च यथा व्याप्यव्यापकभावेनापृथक्सिद्धिरूपमनन्यत्वं तथा जीवानां ब्रह्मणश्चेत्यर्थकेन महावाक्यान्यनन्यपराणि न तु जीवब्रह्माभेदपराणीत्युक्तमेव । तथापि 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' (ब्र. ४. १. ३. सू.) इत्यहंग्रहाधिकरणे महावाक्यानामभेदपरत्वव्यवस्थापनेनाचार्यैरेव तत्प्रत्याख्यातम् । तत्र हि 'विश्वाधिको रुद्रो महर्षिः' । 'अधिकं तु भेदनिर्देशात्' इत्यादिश्रुति (ब्र. २· १ २२.) सूत्रेषु प्रत्यगात्मनः पशोर्जीवात्पत्युः परब्रह्मणोऽधिकत्वेन निरूपितत्वादज्ञत्वसर्वज्ञत्वादिगुणैर्न्यूनाधिकभावस्य संप्रतिपन्नत्वाच्च मुमुक्षुभिर्ब्रह्मोपासनं स्वशेषित्वादिप्रकारेण स्वभिन्नतयैव कार्यं न तु स्वात्मतयेति पूर्वपक्षनिराकरणार्थं प्रवृत्ते सिद्धान्तभाष्ये 'यद्यपि जीवादधिकमेव शिवाख्यं परं ब्रह्म तथाप्युपासिता 'अहं ब्रह्मास्मि' ति तदुपासीत, यतः पूर्वेऽप्युपासितारः 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इत्यात्मेत्येवावगच्छन्ति । उपासितुरर्थान्तरत्वेऽपि तानुपासितॄननुगृह्णाति स्वस्वरूपतया परं ब्रह्म, ते च

पुनः स्वात्मतया ग्राहयन्ति च परानपि शिष्यान् 'तत्त्वमसि' इत्यादिना'' इति । अत्र 'तत्त्वमस्या' दिवाक्यानामभेदार्थत्वप्रदर्शनेन प्रागुक्तं शरीरशरीरिभावकृतापृथक्सिध्यर्थत्वं प्रत्याख्यातमिति स्पष्टमेव । तदुपपादनार्थमेव 'त्वं वा अहमस्मि' इति जाबालवाक्यमुदाहृतम्। यदि शरीरशरीरिभावनिबन्धनं सामानाधिकरण्यं तदानीम् 'अहं वै त्वमसि' इति निर्देश एवोपपद्यते । त्वंशब्दनिर्दिष्टे परमेश्वरे स्वशरीरकत्वपर्यन्तस्याहंशब्दस्य वृत्त्युपपत्तेः । 'त्वं वा अहमस्मि' इति निर्देशस्तु नोपपद्यते । अहंशब्दनिर्दिष्टे परमेश्वरशरीररूपे स्वस्मिन्परमेश्वरवाचिनस्त्वंशब्दस्य वृत्त्यनुपपत्तेः । शरीरवाचिनां हि शरीरिपर्यन्तत्वं व्युत्पत्तिसिद्धं न तु शरीरिवाचिनां शरीरपर्यन्तत्वम्। अतो भेदाभेदशंकानिराकरणेनाभेददार्ढ्यार्थं परस्पराभेद एवात्र बोध्यः। न च वाक्यद्वयेऽपि त्वंशब्दौ प्रस्तुतगुणविशिष्टपरमेश्वरविषयौ अहंशब्दौ स्वशरीरकत्वविशिष्टपरमेश्वरविषयाविति वाक्यद्वयमपि एकरूपार्थपरमिति वाच्यम्। तदानीं 'त्वं वा अहमस्मि' 'अहं वै त्वमसि' इति व्यवस्थितयुष्मदस्मच्छब्दपौर्वापर्यास्म्यसिशब्दप्रयोगकृतवाक्यद्वयवैलक्षण्यवैयर्थ्यापत्तेः, एकेनैव वाक्येन स्वान्तर्यामिणः परमेश्वरस्य चाभेदसिद्धौ वाक्यान्तरवैयर्थ्यापत्तेश्च । न चाभेदप्रतिपत्तिदार्ढ्यार्थं वाक्यद्वयं, जीवपरमेश्वरयोरिवान्तर्यामिपरमेश्वरयोर्भेदभ्रान्त्यभावेन तद्दार्ढ्यापादनस्यानपेक्षितत्वात् इत्येवं प्रकारेण तत्र जीवपरमेश्वराभेदार्थकत्वं स्पष्टम् । अतस्तदनुसारेण तत्त्वमस्यादिवाक्यानामप्यभेदार्थकत्वमेव युक्तमित्येवं तदुपपादनं कृतं भवति । किञ्च तत्त्वमसिवाक्यच्छाययापि तस्याभेदार्थकत्वमवसीयते । तर्हि त्वंशब्दनिर्दिष्टे प्राग्वर्णितजगत्कारणत्वादिविशिष्टपरमेश्वराभेदो बोद्धव्यत इत्यसिशब्दान्वयस्वारस्यादवसीयते । अतस्तत्र त्वंशब्दस्संबोध्यजीवमात्रपरः न तु तदन्तर्यामिपर इत्यभ्युपगन्तव्यम् । संबोध्यं प्रति स्वात्मन इव स्वान्तर्यामिणः स्वानुभवेन प्राचीनोपदेशेन वा प्रसिद्धत्वाभावेन तस्य तं प्रत्युद्देश्यतानर्हत्वात् प्रकृतस्य सद्रूपस्य परमेश्वरस्य प्रागुपदिष्टत्वसमर्थने तत्र तद्भेदशंकानुदयेन तदभेदबोधानपेक्षणात् । अतस्तत्त्वमसिवाक्यं जीवब्रह्माभेदपरमित्येव युक्तम् । एतत्सर्वमभिप्रेत्यैव भाष्यकारास्तस्मिन्नधिकरणे 'ते च पुनः स्वात्मतया ग्राहयन्ति परानपि शिष्यान् 'तत्त्वमसि' इत्यादिनेत्येतदनन्तरं 'निरवधिकपरमानन्दमयनिष्कळंकशिवत्वप्राप्तिर्हि मुक्तिः । शिवत्वप्राप्तिरात्मनः पशुत्वनिवृत्तिमन्तरेण न भवति । पशुत्वनिवृत्तिश्च न तद्भावनां विना । अतो निरन्तरं शिवोऽहमिति भावनाप्रवाहेण शिथिलितपाशतयापगतपशुभावः उपासकश्शिव एव भवति' इति ग्रन्थसन्दर्भेण शिवाभेदभावनां विना न मुक्तिरिति व्यवस्थापयामासुः । 'अत एव तदन्यस्य मुमुक्षुध्येयत्वं निषिध्यते 'शिव एको ध्येयश्शिवंकरस्सर्वमन्यत्परित्यज्य' इत्यादिश्रुतिषु' इति ग्रन्थेनांशाधिकरणे प्रदर्शितं तत्त्वमसिवाक्यार्थमवलंब्य सशेषित्वादिप्रकारेण स्वभिन्नत्वेन ब्रह्मोपासना कार्येति शंकामितरपरित्यागश्रुतिविरोधेन निराचक्रुः । तत्त्वमस्यादिवाक्यानां शरीरशरीरिभावार्थकत्वाभावेऽप्यारोपितभेदोपासनाविधिपरत्वमस्त्विति शंकाञ्च निवृत्तब्राह्मणादिदेहाभिमानमयपशुभावस्य निरतिशयस्वरूपानन्दसाक्षिस्वप्रकाशशिवरूपपराहंभावापत्तिर्मुक्तिः' इति ग्रन्थेनारोपितार्थास्पर्शिन्यां मुक्तबुद्धावप्युपासनाकालाभ्यस्ताभेदभावनाप्रकर्षजवासनादार्ढ्यप्रयुक्तशिवाहंभावानुवृत्त्युक्त्या निराचक्रुः । तस्मात् जीवब्रह्माभेदेऽप्याचार्याणां संप्रतिपत्तिरसन्दिग्धा ॥ ५१ ॥

नन्वेवमाचार्याणां व्यवहारदृष्ट्या परिणामाभ्युपगमस्य तत्त्वदृष्ट्या विवर्त्ताभ्युपगमस्य जीवब्रह्माभेदाभ्युपगमस्य चाद्वैतवादिमतादविशेषे किमर्थः प्रस्थानान्तरतया पृथग्भाष्यारंभ इत्याशंक्याह——

शुद्धं ब्रह्माद्वितीयं कथमपि हृदयं नाधिरोहेत्सुसूक्ष्मं
तत्र स्थैर्याय बुद्धेस्तदनुगुणमहितं तच्चिरं ध्येयमादौ ।
इत्यार्यैर्भक्तिसिद्ध्यै सगुणमिह परं ब्रह्म नान्यत्ततोऽस्ती-
त्येवं वेदान्तवाक्यैस्सह तदनुगुणं योजितं सूत्रजातम् ॥५२॥

निर्विशेषं ब्रह्म साक्षात्काराय ध्यातव्यमतिसूक्ष्मत्वात् पुरुषप्रयत्नेन कथञ्चिदपि हृदयं नाधिरोहेदिति तत्र बुद्धिस्थैर्यं दृढभक्तिपूर्वकाचिरनिरन्तरोपासनाराधितस्यानन्तमङ्गळगुणविशिष्टविग्रहविशिष्टस्य सांबशिवरूपस्य तस्यैव प्रसादेन लंभनीयम् । 'स नो बुद्ध्या शुभया संयुनक्तु' इति श्रुतेः 'ईश्वरात् ज्ञानमन्विच्छेत्' इति स्मृतेः 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना । महाभयकृतत्राणा द्वित्राणामेव जायते' इत्यभियुक्तोक्तेश्च । अतस्तत्र भक्त्यतिशयसिद्धये 'तदेव परंब्रह्म नापरमस्य तात्विकं रूपमस्ति' इति प्रतिपादनार्थं प्रवृत्तैराचार्यैस्तदानुगुण्येन वेदान्तवाक्यानां ब्रह्मसूत्राणां च योजनां प्रदर्शयितुमिदं भाष्यं प्रवर्तितमित्यर्थः ॥५२॥

ननु शङ्करभगवत्पादैरुपपादितया रीत्या वस्तुतो निर्विशेषं ब्रह्मेत्यभ्युपगतं चेत् वेदान्तानां सविशेषपरतया योजनमयुक्तम् । सर्वेषां वेदान्तानामद्वैते निर्विशेषे ब्रह्मणि तात्पर्यमित्येव तैरंगीकृतत्वात् तद्व्यतिरेकेण तस्मिन्प्रमाणान्तराभावात् सविशेषपरतया योजनं भक्त्यर्थं कल्पितार्थविषयमर्थवादमात्ररूपमित्यभ्युपगतत्वेन ध्यानास्पदसविशेषब्रह्मांगीकरणमयुक्तं, वेदान्तव्यतिरेकेण तत्रापि प्रमाणान्तराभावादित्याशंक्याह

यद्ध्यानप्रक्रियायां न पठितमथ यन्निर्गुणप्रक्रियायां
दिव्यं देहं गुणान्वा श्रुतिषु कथयति ब्रह्मणो वाक्यजातम् ।
तात्पर्यं तेषु तस्यान्तरमभिदधते देशिकेन्द्रास्ततस्ते
शुद्धाद्वैतेऽपि साध्ये स्वयमधिकृतिषु ब्रह्मलिंगान्यवोचन् ॥ ५३ ॥

सत्यं सर्वेषां वेदान्तानां निर्विशेषे ब्रह्मणि महातात्पर्यमिति, तथापि सगुणविद्याप्रकरणेषु ध्यानार्थं परब्रह्मणो यद्दिव्यविग्रहप्रतिपादनं यच्च दिव्यमंगळगुणप्रतिपादनं यच्च निर्गुणविद्याप्रकरणेषु तस्य स्तुत्यर्थं प्रतिपत्त्यर्थं वा तदुभयप्रतिपादनं तस्य सर्वस्यापि तदुभयविषयमवान्तरतात्पर्यमस्त्येव । अत एव 'अन्तस्तद्धर्मोपदेशात्' इति (ब्र. १. १. २१. सू.)अधिकरणे 'स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इति भाष्येण 'हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी' इत्यादिवाक्यप्रतिपन्नविग्रहसद्भावं प्रतिपादयता 'व्यतिहारो विशिंषन्ति हीतरवत्' (ब्र. ३. ३. ३६. सू.)इत्यधिकरणे 'ध्यानार्थेऽपि सत्यकामादिगुणोपदेशे तद्गुण ईश्वरः प्रसिध्यति 'इति भाष्येण 'एषआत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासस्सत्यकामस्सत्यसंकल्प' इत्यादिवाक्यप्रतिपन्नगुणगणसद्भावं प्रतिपादयता च तेषां वाक्यानां ब्रह्मध्यानप्रकरणपठितानामपि ब्रह्मणो विग्रहगुणगणयोरवान्तरतात्पर्यमस्तीति भगवत्पादैर्विभावितम् । तुल्यन्यायतया निर्गुणप्रकरणेषु जीवादिव्यावृत्तं तत्प्रतिपत्त्युपायत्वेन तत्स्तुत्यर्थत्वेन

वा गुणादिसमाम्नानस्यापि 'सर्वस्य वशी सर्वस्येशान' इत्यादेस्तत्रावान्तरतात्पर्यमस्तीत्यंगीकृतमेव । अत एव 'अक्षरमंबरान्तधृतेः।' (ब्र. १. ३. ९. सू) 'आनन्दमयोऽभ्यासात्' (ब्र. १. १. १३. सू.) 'सुषुप्त्युत्क्रान्त्योर्भेदेन।' (ब्र. १. ३. ४३. सू) 'अत्ता चराचरग्रहणात्।' (ब्र. १. २. ९. सू) 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र. १. २. २२. सू) इत्याद्यधिकरणेष्वानन्दवल्ल्यादीनां जीवपरत्वादिव्यवच्छेदेन निर्विशेषब्रह्मपरत्वनिर्णयार्थं प्रवृत्तेषु सर्वस्रष्टृत्वसर्वप्रशासितृत्वसर्वाधिपतित्वसंहर्तृत्वादीनि जीवादिव्यावृत्तानि ब्रह्मलिंगानीति तैरेवोपन्यस्तम्। यथा 'अन्तस्तद्धर्मोपदेशात्।' (ब्र. १. १. २१. सू) 'अन्तर उपपत्तेः' (ब्र. १. २. १३. सू.) इत्याद्यधिकरणेषु अन्तरादित्यादिविद्यानां जीवपरत्वादिव्यवच्छेदेन सविशेषब्रह्मपरत्वनिर्णयार्थं प्रवृत्तेषु निरंकुशैश्वर्यवामनीत्वभामनीत्वादीनि निर्वृत्तब्रह्मलिंगानीत्युपन्यस्तम्। एवमादिभिराचार्यव्यवहारैस्सविशेषप्रतिपादकवाक्यानां तत्रावान्तरतात्पर्यं तदभिमतमित्येव उन्नीयते। तेषां निर्विशेषब्रह्मणि महातात्पर्यं संक्षेपशारीरके व्यवस्थापितम्—'सगुणवाक्यमपीह समन्वितं भवति निर्गुणवस्तुनि सर्वशः। न खलु निर्गुणवस्तुसमन्वयं न सहते सगुणेऽस्य समन्वयः॥ सत्यासत्यवपुस्तथाहि सगुणं ब्रह्मास्य विद्या तथा तद्वत्तद्विषयस्य वेदवचसस्तात्पर्यमेवंविधम्। तेनावान्तरमस्य वेदवचसस्तात्पर्यमन्यादृशञ्चान्यन्निर्गुणवस्तुतत्त्वविषयं संकीर्त्यते भागशः॥' इति। तस्मात् सर्वेषां वेदान्तानां महातात्पर्येण तात्त्विकस्य निर्विशेषस्य ध्यानप्रकरणगतानां निर्गुणप्रकरणगतानाञ्च सगुणवाक्यानामवान्तरतात्पर्येण तात्त्विकातात्त्विकवपुषस्सविशेषस्य च सिद्धेर्युक्त एव भाष्यकाराणां सविशेषनिर्विशेषोभयरूपब्रह्माभ्युपगमः॥२३

ओम् ।

शिवाभ्यां नमः ।

श्रीमच्छ्रीकण्ठाचार्यकृतं

# ब्रह्मसूत्रभाष्यम् ।

## श्रीमदप्पयदीक्षितकृतशिवार्कमणिदीपिकासहितम् ।

---

## श्रीकण्ठभाष्यप्रारम्भः ।

ॐ नमो[1]ऽहंपदार्थाय लोकानां सिद्धिहेतवे ।
सच्चिदानन्दरूपाय शिवाय परमात्मने ॥ १ ॥

---

## शिवार्कमणिदीपिकाप्रारम्भः ।

यस्याहुरागमविदः परिपूर्णशक्तेरंशे कियत्यपि निविष्टममुं प्रपञ्चम् । तस्मै तमालरुचिभासुरकन्धराय नारायणीसहचराय नमश्शिवाय ॥ १ ॥ आकर्णकृष्टधनुराहितमोहनास्त्रमाराग्निरीक्ष्य मदनं कुपितस्य किञ्चित् । शम्भोः समाधिसमये विक[2]सत्कृशानुज्वालाकलापजटिलं निटि[3]लं स्मरामि ॥ २ ॥ महापाशुपतज्ञानसम्प्रदायप्रवर्तकान् । अंशावतारानीशस्य योगा[4]चार्याननुपास्महे ॥ ३ ॥ आसेतुबन्धतटमा च तुषारशैलादाचार्यदीक्षित इति प्रथिताभिधानम् । अद्वैतचित्सुखमहाम्बुधिमग्नभावमस्मत्पितामहमशेषगुरुं प्रपद्ये ॥ ४ ॥ यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्तद्दर्शनादखिलदर्शनपारभाजः । तं सर्ववेदसमशेषबुधाधिराजं श्रीरङ्गराजमखिनं पितरं नतोऽस्मि ॥ ५ ॥ यद्यप्यद्वैत एव श्रुतिशिखरगिरामागमानां च निष्ठा साकं सर्वैः पुराणस्मृतिनिकरमहाभारतादिप्रबन्धैः । तत्रैव ब्रह्मसूत्राण्यपि च विमृशतां भान्ति विश्रान्तिमन्ति प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैस्तदेव ॥ ६ ॥ तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः । अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥ ७ ॥ अनुग्रहश्च देवस्य शक्त्या चिद्रूपया सह । यथावत्तं परिज्ञाय ध्यायद्भिस्समवाप्यते ॥ ८ ॥ इति भगवता वेदव्यासेन सूत्रयता परं सगुणमपि तत्साम्बं ब्रह्म न्यरूपि शिवाभिधम् । यदनुकरणादर्थानन्येऽपि सञ्जगृहुर्बहून्प[5]णिनजमुखाः सूत्रैर्विष्वङ्मुखत्वविभूषणैः ॥ ९ ॥ तदिदं ब्रह्मसूत्राणां तात्पर्यं सगुणे शिवे । प्रकटीकर्तुमाचार्यः प्रणिन्ये भाष्यमुत्तमम् ॥ १० ॥ श्रीकण्ठाचार्यकृतं भाष्यं यद्ब्रह्मसूत्राणाम् । प्रतिपदमतिगम्भीरं न शक्यते मादृशैर्बोद्धुम् ॥ ११ ॥ भाष्यमेतदनघं विवृण्विति स्वप्नजागरणयोस्समं प्रभुः । चिन्नबोम्मनृपरूपभृत्स्वयं मां न्ययुङ्क्त महिलार्धविग्रहः ॥ १२ ॥ (श्रीचि[6]न्नबोम्मनृपतिः श्रितपारिजातः सर्वात्मना पशुपतिं

---

(१) 'नमो ब्रह्मपदार्थाये'ति पाठान्तरम् । (२) 'विलस'दिति ग. पाठः । (३) 'नयनं' इति ख. पाठः । (४) योगाचार्या इति श्रीकण्ठाचार्याणामेव नामान्तरम् । (५) पणिनजः पाणिनिः । 'फणिपतिमुखाः' इति पाठे फणिपतिः पतञ्जलिरित्यर्थः । (६) इदं पद्यं केषुचित्पुस्तकेषु नास्ति ।

